ततः प्रभातसमये नैमिषीयास्तपोधनाः।
सत्रान्तेऽवभृथं कर्तुं सर्व एव समुद्ययुः॥ २
तदा ब्रह्मसमादेशाद्देवी साक्षात्सरस्वती।
प्रसन्ना स्वादुसलिला प्रावर्तत नदी शुभा॥ ३
सरस्वतीं नदीं दृष्ट्वा मुनयो हृष्टमानसाः।
समाप्य सत्रं प्रारब्धं चक्रुस्तत्रावगाहनम्॥ ४
अथ सन्तर्प्य देवादींस्तदीयैः सलिलैः शिवैः।
स्मरन्तः पूर्ववृत्तान्तं ययुर्वाराणसीं प्रति॥ ५
तदा ते हिमवत्पादात्पन्ततीं दक्षिणामुखीम्।
दृष्ट्वा भागीरथीं तत्र स्नात्वा तत्तीरतो ययुः॥ ६
ततो वाराणसीं प्राप्य मुदिताः सर्व एव ते।
तदोत्तरप्रवाहायां गङ्गायामवगाह्य च॥ ७
अविमुक्तेश्वरं लिङ्गं दृष्ट्वाभ्यर्च्य विधानतः।
प्रयातुमुद्यतास्तत्र ददृशुर्दिवि भास्वरम्॥ ८
सूर्यकोटिप्रतीकाशं तेजोदिव्यं महाद्भुतम्।
आत्मप्रभावितानेन व्याप्तसर्वदिगन्तरम्॥ ९
अथ पाशुपताः सिद्धाः भस्मसञ्छन्नविग्रहाः।
मुनयोऽभ्येत्य शतशो लीनाः स्युस्तत्र तेजसि॥ १०
तथा विलीयमानेषु तपस्विषु महात्मसु।
सद्यस्तिरोदधे तेजस्तदद्भुतमिवाभवत्॥ ११
तद् दृष्ट्वा महदाश्चर्यं नैमिषीया महर्षयः।
किमेतदित्यजानन्तो ययुर्ब्रह्मवनं प्रति॥ १२
प्रागेवैषां तु गमनात्पवनो लोकपावनः।
दर्शनं नैमिषीयाणां संवादस्तैर्महात्मनः॥ १३
शुद्धां बुद्धिं ततस्तेषां साम्बे सानुचरे शिवे।
समाप्तिं चापि सत्रस्य दीर्घपूर्वस्य सत्रिणाम्॥ १४
विज्ञाप्य जगतां धात्रे ब्रह्मणे ब्रह्मयोनये।
स्वकार्ये तदनुज्ञातो जगाम स्वपुरं प्रति॥ १५
अथ स्थानगतो ब्रह्मा तुम्बुरोर्नारदस्य च।
परस्परं स्पर्द्धितयोर्गाने विवदमानयोः॥ १६
तदुद्भावितगानोत्थरसैर्मध्यस्थमाचरन्।
गन्धर्वैरप्सरोभिश्च सुखमास्ते निषेवितः॥ १७
तदानवसरादेव द्वाःस्थैर्द्वारि निवारिताः।
मुनयो ब्रह्मभवनाद्बहिः पार्श्वमुपाविशन्॥ १८
अथ तुम्बुरुणा गाने समतां प्राप्य नारदः।
साहचर्येष्वनुज्ञातो ब्रह्मणा परमेष्ठिना॥ १९
त्यक्त्वा परस्परस्पर्द्धां मैत्रीं च परमां गतः।
सह तेनाप्सरोभिश्च गन्धर्वैश्च समावृतः॥ २०
उपवीणयितुं देवं नकुलीश्वरमीश्वरम्।
भवनान्निर्ययौ धातुर्जलदादंशुमानिव॥ २१
तं दृष्ट्वा षट्कुलीयास्ते नारदं मुनिगोवृषम्।
प्रणम्यावसरं शम्भोः पप्रच्छुः परमादरात्॥ २२
स चावसर एवायमितोऽन्तर्गम्यतामिति।
वदन्ययावन्यपरस्त्वरया परया युतः॥ २३
ततो द्वारि स्थिता ये वै ब्रह्मणे तान्यवेदयन्।
तेन ते विविशुर्वेश्म पिण्डीभूयाण्डजन्मनः॥ २४
प्रविश्य दूरतो देवं प्रणम्य भुवि दंडवत्।
समीपे तदनुज्ञाताः परिवृत्योपतस्थिरे॥ २५
तांस्तत्रावस्थितान् पृष्ट्वा कुशलं कमलासनः।
वृत्तान्तं वो मया ज्ञातं वायुरेवाह नो यतः॥ २६
भवद्भिः किं कृतं पश्चान्मारुतेऽन्तर्हिते सति।
इत्युक्तवति देवेशे मुनयोऽवभृथात्परम्॥ २७
गङ्गातीर्थेऽस्य गमनं यात्रां वाराणसीं प्रति।
दर्शनं तत्र लिङ्गानां स्थापितानां सुरेश्वरैः॥ २८
अविमुक्तेश्वरस्यापि लिङ्गस्याभ्यर्चनं सकृत्।
आकाशे महतस्तस्य तेजोराशेश्च दर्शनम्॥ २९
मुनीनां विलयं तत्र निरोधं तेजसस्ततः।
याथात्म्यवेदनं तस्य चिन्तितस्यापि चात्मभिः॥ ३०
सर्वं सविस्तरं तस्मै प्रणम्याहुर्मुहुर्मुहुः।
मुनिभिः कथितं श्रुत्वा विश्वकर्मा चतुर्मुखः॥ ३१

कंपयित्वा शिरः किञ्चित्प्राह गम्भीरया गिरा।
प्रत्यासीदति युष्माकं सिद्धिरामुष्मिकी परा॥ ३२
भवद्भिर्दीर्घसत्रेण चिरमाराधितः प्रभुः।
प्रसादाभिमुखो भूत इति भूतार्थसूचितम्॥ ३३
वाराणस्यां तु युष्माभिर्यद् दृष्टं दिवि दीप्तिमत्।
तल्लिंगसंज्ञितं साक्षात्तेजो माहेश्वरं परम्॥ ३४
तत्र लीनाश्च मुनयः श्रौतपाशुपतव्रताः।
मुक्ता बभूवुः स्वस्थाश्च नैष्ठिका दग्धकिल्बिषाः॥ ३५
प्राप्यानेन यथा मुक्तिरचिराद्भवतामपि।
स चायमर्थः सूच्येत युष्मद्दृष्टेन तेजसा॥ ३६
तत्र वः काल एवैष दैवादुपनतः स्वयम्।
प्रयात दक्षिणं मेरोः शिखरं देवसेवितम्॥ ३७
सनत्कुमारो यत्रास्ते मम पुत्रः परो मुनिः।
प्रतीक्ष्यागमनं साक्षाद्भूतनाथस्य नंदिनः॥ ३८
पुरा सनत्कुमारोऽपि दृष्ट्वापि परमेश्वरम्।
अज्ञानात्सर्वयोगीन्द्रमानी विनयदूषितः॥ ३९
अभ्युत्थानादिकं युक्तमकुर्वन्नतिनिर्भयः।
ततोऽपराधात्क्रुद्धेन महोष्ट्रो नंदिना कृतः॥ ४०
अथ कालेन महता तदर्थे शोचता मया।
उपास्य देवं देवीं च नंदिनं चानुनीय वै॥ ४१
कथंचिद् दुष्टता तस्य प्रयत्नेन निवारिता।
प्रापितो हि यथापूर्वं सनत्पूर्वां कुमारताम्॥ ४२
तदाह च महादेवः स्मयन्निव गणाधिपम्।
अवज्ञाय हि मामेव तथाहंकृतवान्मुनिः॥ ४३
अतस्त्वमेव याथात्म्यं ममास्मै कथयानघ।
ब्रह्मणः पूर्वजः पुत्रो मां मूढमिव संस्मरन्॥ ४४
मयैव शिष्यस्ते दत्तो मम ज्ञानप्रवर्तकः।
धर्माध्यक्षाभिषेकं च तव निर्वर्त्तयिष्यति॥ ४५
स एवं व्याहृतो भूयः सर्वभूतगणाग्रणीः।
यत्पुराज्ञापनं मूर्ध्ना प्राप्य प्रतिगृहीतवान्॥ ४६
तथा सनत्कुमारोऽपि मेरौ मदनुशासनात्।
प्रसादार्थं गणस्यास्य तपश्चरति दुश्चरम्॥ ४७
द्रष्टव्यश्चेति युष्माभिः प्राग्गणेशसमागमात्।
तत्प्रसादार्थमचिरान्नन्दी तत्रागमिष्यति॥ ४८
इति सत्वरमादिश्य प्रेषिता विश्वयोनिना।
कुमारशिखरं मेरोर्दक्षिणं मुनयो ययुः॥ ४९

*इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे नैमिषर्षियात्रावर्णनं नाम चत्वारिंशोऽध्यायः॥ ४०॥*

# अथैकचत्वारिंशोऽध्यायः

*सूत उवाच*

तत्र स्कन्दसरो नाम सरः सागरसन्निभम्।
अमृतस्वादुशिशिरस्वच्छागाधलघूदकम्॥ १
समन्ततः संघटितं स्फटिकोपलसञ्चयैः।
सर्वर्तुकुसुमैः फुल्लैश्छादिताखिलदिङ्मुखम्॥ २
शैवलैरुत्पलैः पद्मैः कुमुदैस्तारकोपमैः।
तरङ्गैरभ्रसङ्काशैराकाशमिव भूमिगम्॥ ३
सुखावतरणारोहैः स्थलैर्नीलशिलामयैः।
सोपानमार्गै रुचिरैः शोभमानाष्टदिङ्मुखम्॥ ४
तत्रावतीर्णैश्च यथा तत्रोत्तीर्णैश्च भूयसा।
स्नातैः सितोपवीतैश्च शुक्लकौपीनवल्कलैः॥ ५
जटाशिखायनैर्मुण्डैस्त्रिपुंड्रकृतमण्डनैः।
विरागविवशस्मेरमुखैर्मुनिकुमारकैः॥ ६
घटैः कमलिनीपत्रपुटैश्च कलशैः शिवैः।
कमण्डलुभिरन्यैश्च तादृशैः करकादिभिः॥ ७

आत्मार्थं च परार्थं च देवतार्थं विशेषतः।
आनीयमानसलिलमात्तपुष्पं च नित्यशः॥ ८
अन्तर्जलशिलारूढैर्नीचानां स्पर्शशंकया।
आचारवद्भिर्मुनिभिः कृतभस्माङ्गधूसरैः॥ ९
इतस्ततोऽप्सु मज्जद्भिरिष्टशिष्टैः शिलागतैः।
तिलैश्च साक्षतैः पुष्पैस्त्यक्तदर्भपवित्रकैः॥ १०
देवाद्यमृषिमध्यं च निर्वर्त्य पितृतर्पणम्।
निवेदयेदभिज्ञेभ्यो नित्यस्नानगतान् द्विजान्॥ ११
स्थाने स्थाने कृतानेकबलिपुष्पसमीरणैः।
सौरार्घ्यपूर्वं कुर्वद्भिः स्थण्डिलेभ्यर्चनादिकम्॥ १२
क्वचिन्निमज्जदुन्मज्जत्प्रस्त्रस्तगजयूथपम् ।
क्वचिच्च तृषयायातमृगीमृगतुरङ्गमम्॥ १३
क्वचित्पीतजनोत्तीर्णमयूरवरवारणम् ।
क्वचित्कृततटाघातवृषप्रतिवृषोज्वलम् ॥ १४
क्वचित्कारंडवरवैः क्वचित्सारसकूजितैः।
क्वचिच्च कोकनिनदैः क्वचिद्भ्रमरगीतिभिः॥ १५
स्नानपानादिकरणैः स्वसम्पद्द्रुमजीविभिः।
प्रणयात्प्राणिभिस्तैस्तैर्भाषमाणमिवासकृत् ॥ १६
कूलशाखिशिखालीनकोकिलाकुलकूजितैः।
आतपोपहतान् सर्वान्नामन्त्रयदिवानिशम् ॥ १७
उत्तरे तस्य सरसस्तीरे कल्पतरोरधः।
वेद्यां वज्रशिलामय्यां मृदुले मृगचर्मणि॥ १८
सनत्कुमारमासीनं शश्वद्बालवपुर्धरम्।
तत्कालमात्रोपरतं समाधेरचलात्मनः॥ १९
उपास्यमानं मुनिभिर्योगीन्द्रैरपि पूजितम्।
ददृशुर्नैमिषेयास्ते प्रणताश्चोपतस्थिरे॥ २०
यावत्पृष्टवते तस्मै प्रोचुः स्वागतकारणम्।
तुमुलः शुश्रुवे तावद्दिवि दुंदुभिनिःस्वनः॥ २१
ददृशे तत्क्षणे तस्मिन् विमानं भानुसन्निभम्।
गणेश्वैररसंख्येयैः संवृतं च समन्ततः॥ २२
अप्सरोगणसंकीर्णं रुद्रकन्याभिरावृतम्।
मृदङ्गमुरजोद्घुष्टं वेणुवीणारवान्वितम्॥ २३
चित्ररत्नवितानाढ्यं मुक्तादामविराजितम्।
मुनिभिः सिद्धगन्धर्वैर्यक्षचारणकिन्नरैः ॥ २४
नृत्यद्भिश्चैव गायद्भिर्वादयद्भिश्च संवृतम्।
वीरगोवृषचिह्नेन विद्रुमद्रुमयष्टिना॥ २५
कृतगोपुरसत्कारं केतुना मान्यहेतुना।
तस्य मध्ये विमानस्य चामरद्वितयान्तरे॥ २६
छत्रस्य मणिदंडस्य चन्द्रस्येव शुचेरधः।
दिव्यसिंहासनारूढं देव्या सुयशया सह॥ २७
श्रिया च वपुषा चैव त्रिभिश्चापि विलोचनैः।
प्राकारैरभिकृत्यानां प्रत्यभिज्ञापकं प्रभोः॥ २८
अविलंघ्य जगत्कर्तुराज्ञापनमिवागतम्।
सर्वानुग्रहणं शम्भोः साक्षादिव पुरःस्थितम्॥ २९
शिलादतनयं साक्षाच्छ्रीमच्छूलवरायुधम्।
विश्वेश्वरगणाध्यक्षं विश्वेश्वरमिवापरम्॥ ३०
विश्वस्यापि विधातॄणां निग्रहानुग्रहक्षमम्।
चतुर्बाहुमुदाराङ्गं चन्द्ररेखाविभूषितम्॥ ३१
कंठे नागेन मौलौ च शशांकेनाप्यलंकृतम्।
सविग्रहमिवैश्वर्यं सामर्थ्यमिव सक्रियम्॥ ३२
समाप्तमिव निर्वाणं सर्वज्ञमिव सङ्गतम्।
दृष्ट्वा प्रहृष्टवदनो ब्रह्मपुत्रः सहर्षिभिः॥ ३३
तस्थौ प्राञ्जलिरुत्थाय तस्यात्मानमिवार्पयन्।
अथ तत्रान्तरे तस्मिन्विमाने चावनिं गते॥ ३४
प्रणम्य दण्डवद्देवं स्तुत्वा व्यज्ञापयन्मुनीन्।
षट्कुलीया इमे दीर्घं नैमिषे सत्रमास्थिताः।
आगता ब्रह्मणादिष्टाः पूर्वमेवाभिकांक्षया॥ ३५
श्रुत्वा वाक्यं ब्रह्मपुत्रस्य नंदी
छित्त्वा पाशान्दृष्टिपातेन सद्यः।
शैवं धर्मं चैश्वरं ज्ञानयोगं
दत्त्वा भूयो देवपार्श्वं जगाम॥ ३६

सनत्कुमारेण च तत्समस्तं
व्यासाय साक्षाद्गुरवे ममोक्तम्।
व्यासेन चोक्तं महितेन मह्यं
मया च तद्वः कथितं समासात्॥ ३७
नावेदविद्भ्यः कथनीयमेतत्
पुराणरत्नं पुरशासनस्य।
नाभक्तशिष्याय च नास्तिकेभ्यो
दत्तं हि मोहान्निरयं ददाति॥ ३८
मार्गेण सेवानुगतेन यैस्तद्
दत्तं गृहीतं पठितं श्रुतं वा।
तेभ्यः सुखं धर्ममुखं त्रिवर्गं
निर्वाणमन्ते नियतं ददाति॥ ३९
परस्परस्योपकृतं भवद्भि-
र्मया च पौराणिकमार्गयोगात्।
अतो गमिष्येऽहमवाप्तकामः
समस्तमेवास्तु शिवं सदा नः॥ ४०
सूते कृताशिषि गते मुनयः सुवृत्ता
यागे च पर्यवसिते महति प्रयागे।
काले कलौ च विषयैः कलुषायमाणे
वाराणसीपरिसरे वसतिं वितेनुः॥ ४१
अथ च ते पशुपाशमुमुक्षया-
खिलतया कृतपाशुपतव्रताः।
अधिकृताखिलबोधसमाधयः
परमनिर्वृतिमापुरनिन्दिताः ॥ ४२

*व्यास उवाच*

एतच्छिवपुराणं हि समाप्तं हितमादरात्।
पठितव्यं प्रयत्नेन श्रोतव्यं च तथैव हि॥ ४३
नास्तिकाय न वक्तव्यमश्रद्धाय शठाय च।
अभक्ताय महेशस्य तथा धर्मध्वजाय च॥ ४४
एतच्छ्रुत्वा ह्येकवारं भवेत् पापं हि भस्मसात्।
अभक्तो भक्तिमाप्नोति भक्तो भक्तिसमृद्धिभाक्॥ ४५
पुनः श्रुते च सद्भक्तिर्मुक्तिः स्याच्च श्रुते पुनः।
तस्मात् पुनः पुनश्चैव श्रोतव्यं हि मुमुक्षुभिः॥ ४६
पञ्चावृत्तिः प्रकर्तव्या पुराणस्यास्य सद्धिया।
परं फलं समुद्दिश्य तत्प्राप्नोति न संशयः॥ ४७
पुरातनाश्च राजानो विप्रा वैश्याश्च सत्तमाः।
सप्तकृत्वस्तदावृत्यालभन्त शिवदर्शनम्॥ ४८
श्रोष्यत्यथापि यश्चेदं मानवो भक्तितत्परः।
इह भुक्त्वाखिलान् भोगानन्ते मुक्तिं लभेच्च सः॥ ४९
एतच्छिवपुराणं हि शिवस्यातिप्रियं परम्।
भुक्तिमुक्तिप्रदं ब्रह्मसम्मितं भक्तिवर्धनम्॥ ५०
एतच्छिवपुराणस्य वक्तुः श्रोतुश्च सर्वदा।
सगणः ससुतः साम्बः शं करोतु स शङ्करः॥ ५१

*इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे व्यासोपदेश-श्रीशिवमहापुराणमाहात्म्यवर्णनं नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥*

॥ समाप्तोऽयं ग्रन्थः ॥

॥ श्रीसाम्बशिवार्पणमस्तु ॥

# विष्णुप्रोक्तं श्रीशिवसहस्रनामस्तोत्रम्*

*सूत उवाच*

**श्रूयतां भो ऋषिश्रेष्ठा येन तुष्टो महेश्वरः।**
**तदहं कथयाम्यद्य शैवं नामसहस्रकम्॥ १**

*श्रीविष्णुरुवाच*

**शिवो हरो मृडो रुद्रः पुष्करः पुष्पलोचनः।**
**अर्थिगम्यः सदाचारः शर्वः शम्भुर्महेश्वरः॥ २**
**चन्द्रापीडश्चन्द्रमौलिर्विश्वं विश्वम्भरेश्वरः।**
**वेदान्तसारसंदोहः कपाली नीललोहितः॥ ३**
**ध्यानाधारोऽपरिच्छेद्यो गौरीभर्ता गणेश्वरः।**
**अष्टमूर्तिर्विश्वमूर्तिस्त्रिवर्गस्वर्गसाधनः॥ ४**
**ज्ञानगम्यो दृढप्रज्ञो देवदेवस्त्रिलोचनः।**
**वामदेवो महादेवः पटुः परिवृढो दृढः॥ ५**
**विश्वरूपो विरूपाक्षो वागीशः शुचिसत्तमः।**
**सर्वप्रमाणसंवादी वृषाङ्को वृषवाहनः॥ ६**
**ईशः पिनाकी खट्वाङ्गी चित्रवेषश्चिरंतनः।**
**तमोहरो महायोगी गोप्ता ब्रह्मा च धूर्जटिः॥ ७**
**कालकालः कृत्तिवासाः सुभगः प्रणवात्मकः।**
**उन्नध्रः पुरुषो जुष्यो दुर्वासाः पुरशासनः॥ ८**
**दिव्यायुधः स्कन्दगुरुः परमेष्ठी परात्परः।**
**अनादिमध्यनिधनो गिरीशो गिरिजाधवः॥ ९**
**कुबेरबन्धुः श्रीकण्ठो लोकवर्णोत्तमो मृदुः।**
**समाधिवेद्यः कोदण्डी नीलकण्ठः परश्वधी॥ १०**
**विशालाक्षो मृगव्याधः सुरेशः सूर्यतापनः।**
**धर्मधाम क्षमाक्षेत्रं भगवान् भगनेत्रभित्॥ ११**
**उग्रः पशुपतिस्तार्क्ष्यः प्रियभक्तः परंतपः।**
**दाता दयाकरो दक्षः कपर्दी कामशासनः॥ १२**
**श्मशाननिलयः सूक्ष्मः श्मशानस्थो महेश्वरः।**
**लोककर्ता मृगपतिर्महाकर्ता महौषधिः॥ १३**
**उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः।**
**नीतिः सुनीतिः शुद्धात्मा सोमः सोमरतः सुखी॥ १४**
**सोमपोऽमृतपः सौम्यो महातेजा महाद्युतिः।**
**तेजोमयोऽमृतमयोऽन्नमयश्च सुधापतिः॥ १५**
**अजातशत्रुरालोकः सम्भाव्यो हव्यवाहनः।**
**लोककरो वेदकरः सूत्रकारः सनातनः॥ १६**
**महर्षिकपिलाचार्यो विश्वदीप्तिस्त्रिलोचनः।**
**पिनाकपाणिर्भूदेवः स्वस्तिदः स्वस्तिकृत्सुधीः॥ १७**
**धातृधामा धामकरः सर्वगः सर्वगोचरः।**
**ब्रह्मसृग्विश्वसृक्सर्गः कर्णिकारप्रियः कविः॥ १८**
**शाखो विशाखो गोशाखः शिवो भिषगनुत्तमः।**
**गङ्गाप्लवोदको भव्यः पुष्कलः स्थपतिः स्थिरः॥ १९**
**विजितात्मा विधेयात्मा भूतवाहनसारथिः।**
**सगणो गणकायश्च सुकीर्तिश्छिन्नसंशयः॥ २०**
**कामदेवः कामपालो भस्मोद्धूलितविग्रहः।**
**भस्मप्रियो भस्मशायी कामी कान्तः कृतागमः॥ २१**
**समावर्तोऽनिवृत्तात्मा धर्मपुञ्जः सदाशिवः।**
**अकल्मषश्चतुर्बाहुर्दुरावासो दुरासदः॥ २२**
**दुर्लभो दुर्गमो दुर्गः सर्वायुधविशारदः।**
**अध्यात्मयोगनिलयः सुतन्तुस्तन्तुवर्धनः॥ २३**
**शुभाङ्गो लोकसारङ्गो जगदीशो जनार्दनः।**
**भस्मशुद्धिकरो मेरुरोजस्वी शुद्धविग्रहः॥ २४**
**असाध्यः साधुसाध्यश्च भृत्यमर्कटरूपधृक्।**
**हिरण्यरेताः पौराणो रिपुजीवहरो बली॥ २५**

* श्रीशिवमहापुराणेऽस्मिन् वर्णितमास्ते यदस्य श्रीशिवसहस्रनामस्तोत्रस्य पाठेन सहस्रनामभिः कमलपुष्पार्चनेन च लब्धश्रीसाम्ब-सदाशिवानुग्रहेण भगवान् श्रीविष्णुः सुदर्शनचक्रमाप्तवान्।

महाह्रदो महागर्तः सिद्धवृन्दारवन्दितः।
व्याघ्रचर्माम्बरो व्याली महाभूतो महानिधिः॥ २६
अमृताशोऽमृतवपुः पाञ्चजन्यः प्रभञ्जनः।
पञ्चविंशतितत्त्वस्थः पारिजातः परावरः॥ २७
सुलभः सुव्रतः शूरो ब्रह्मवेदनिधिर्निधिः।
वर्णाश्रमगुरुर्वर्णी शत्रुजिच्छत्रुतापनः॥ २८
आश्रमः क्षपणः क्षामो ज्ञानवानचलेश्वरः।
प्रमाणभूतो दुर्ज्ञेयः सुपर्णो वायुवाहनः॥ २९
धनुर्धरो धनुर्वेदो गुणराशिर्गुणाकरः।
सत्यः सत्यपरोऽदीनो धर्माङ्गो धर्मसाधनः॥ ३०
अनन्तदृष्टिरानन्दो दण्डो दमयिता दमः।
अभिवाद्यो महामायो विश्वकर्मविशारदः॥ ३१
वीतरागो विनीतात्मा तपस्वी भूतभावनः।
उन्मत्तवेषः प्रच्छन्नो जितकामोऽजितप्रियः॥ ३२
कल्याणप्रकृतिः कल्पः सर्वलोकप्रजापतिः।
तरस्वी तारको धीमान् प्रधानः प्रभुरव्ययः॥ ३३
लोकपालोऽन्तर्हितात्मा कल्पादिः कमलेक्षणः।
वेदशास्त्रार्थतत्त्वज्ञोऽनियमो नियताश्रयः॥ ३४
चन्द्रः सूर्यः शनिः केतुर्वराङ्गो विद्रुमच्छविः।
भक्तिवश्यः परब्रह्म मृगबाणार्पणोऽनघः॥ ३५
अद्रिरद्र्यालयः कान्तः परमात्मा जगद्गुरुः।
सर्वकर्मालयस्तुष्टो मङ्गल्यो मङ्गलावृतः॥ ३६
महातपा दीर्घतपाः स्थविष्ठः स्थविरो ध्रुवः।
अहः संवत्सरो व्याप्तिः प्रमाणं परमं तपः॥ ३७
संवत्सरकरो मन्त्रप्रत्ययः सर्वदर्शनः।
अजः सर्वेश्वरः सिद्धो महारेता महाबलः॥ ३८
योगी योग्यो महातेजाः सिद्धिः सर्वादिरग्रहः।
वसुर्वसुमनाः सत्यः सर्वपापहरो हरः॥ ३९
सुकीर्तिशोभनः श्रीमान् वेदाङ्गो वेदविन्मुनिः।
भ्राजिष्णुर्भोजनं भोक्ता लोकनाथो दुराधरः॥ ४०
अमृतः शाश्वतः शान्तो बाणहस्तः प्रतापवान्।
कमण्डलुधरो धन्वी अवाङ्मनसगोचरः॥ ४१
अतीन्द्रियो महामायः सर्वावासश्चतुष्पथः।
कालयोगी महानादो महोत्साहो महाबलः॥ ४२
महाबुद्धिर्महावीर्यो भूतचारी पुरंदरः।
निशाचरः प्रेतचारी महाशक्तिर्महाद्युतिः॥ ४३
अनिर्देश्यवपुः श्रीमान् सर्वाचार्यमनोगतिः।
बहुश्रुतोऽमहामायो नियतात्मा ध्रुवोऽध्रुवः॥ ४४
ओजस्तेजोद्युतिधरो जनकः सर्वशासनः।
नृत्यप्रियो नित्यनृत्यः प्रकाशात्मा प्रकाशकः॥ ४५
स्पष्टाक्षरो बुधो मन्त्रः समानः सारसम्प्लवः।
युगादिकृद्युगावर्तो गम्भीरो वृषवाहनः॥ ४६
इष्टोऽविशिष्टः शिष्टेष्टः सुलभः सारशोधनः।
तीर्थरूपस्तीर्थनामा तीर्थदृश्यस्तु तीर्थदः॥ ४७
अपांनिधिरधिष्ठानं दुर्जयो जयकालवित्।
प्रतिष्ठितः प्रमाणज्ञो हिरण्यकवचो हरिः॥ ४८
विमोचनः सुरगणो विद्येशो बिन्दुसंश्रयः।
बालरूपोऽबलोन्मत्तोऽविकर्ता गहनो गुहः॥ ४९
करणं कारणं कर्ता सर्वबन्धविमोचनः।
व्यवसायो व्यवस्थानः स्थानदो जगदादिजः॥ ५०
गुरुदो ललितोऽभेदो भावात्मात्मनि संस्थितः।
वीरेश्वरो वीरभद्रो वीरासनविधिर्विराट्॥ ५१
वीरचूडामणिर्वेत्ता चिदानन्दो नदीधरः।
आज्ञाधारस्त्रिशूली च शिपिविष्टः शिवालयः॥ ५२
वालखिल्यो महाचापस्तिग्मांशुर्बधिरः खगः।
अभिरामः सुशरणः सुब्रह्मण्यः सुधापतिः॥ ५३

मघवान्कौशिको गोमान्विरामः सर्वसाधनः।
ललाटाक्षो विश्वदेहः सारः संसारचक्रभृत्॥ ५४
अमोघदण्डो मध्यस्थो हिरण्यो ब्रह्मवर्चसी।
परमार्थः परो मायी शम्बरो व्याघ्रलोचनः॥ ५५
रुचिर्विरञ्चिः स्वर्बन्धुर्वाचस्पतिरहर्पतिः।
रविर्विरोचनः स्कन्दः शास्ता वैवस्वतो यमः॥ ५६
युक्तिरुन्नतकीर्तिश्च सानुरागः परञ्जयः।
कैलासाधिपतिः कान्तः सविता रविलोचनः॥ ५७
विद्वत्तमो वीतभयो विश्वभर्त्तानिवारितः।
नित्यो नियतकल्याणः पुण्यश्रवणकीर्तनः॥ ५८
दूरश्रवा विश्वसहो ध्येयो दुःस्वप्ननाशनः।
उत्तारणो दुष्कृतिहा विज्ञेयो दुःसहोऽभवः॥ ५९
अनादिर्भूर्भुवो लक्ष्मीः किरीटी त्रिदशाधिपः।
विश्वगोप्ता विश्वकर्ता सुवीरो रुचिराङ्गदः॥ ६०
जननो जनजन्मादिः प्रीतिमान्नीतिमान्धवः।
वसिष्ठः कश्यपो भानुर्भीमो भीमपराक्रमः॥ ६१
प्रणवः सत्पथाचारो महाकोशो महाधनः।
जन्माधिपो महादेवः सकलागमपारगः॥ ६२
तत्त्वं तत्त्वविदेकात्मा विभुर्विश्वविभूषणः।
ऋषिर्ब्राह्मण ऐश्वर्यजन्ममृत्युजरातिगः॥ ६३
पञ्चयज्ञसमुत्पत्तिर्विश्वेशो विमलोदयः।
आत्मयोनिरनाद्यन्तो वत्सलो भक्तलोकधृक्॥ ६४
गायत्रीवल्लभः प्रांशुर्विश्वावासः प्रभाकरः।
शिशुर्गिरिरतः सम्राट् सुषेणः सुरशत्रुहा॥ ६५
अमोघोऽरिष्टनेमिश्च कुमुदो विगतज्वरः।
स्वयंज्योतिस्तनुज्योतिरात्मज्योतिरचञ्चलः॥ ६६
पिङ्गलः कपिलश्मश्रुर्भालनेत्रस्त्रयीतनुः।
ज्ञानस्कन्दो महानीतिर्विश्वोत्पत्तिरुपप्लवः॥ ६७

भगो विवस्वानादित्यो योगपारो दिवस्पतिः।
कल्याणगुणनामा च पापहा पुण्यदर्शनः॥ ६८
उदारकीर्तिरुद्योगी सद्योगी सदसन्मयः।
नक्षत्रमाली नाकेशः स्वाधिष्ठानपदाश्रयः॥ ६९
पवित्रः पापहारी च मणिपूरो नभोगतिः।
हृत्पुण्डरीकमासीनः शक्रः शान्तो वृषाकपिः॥ ७०
उष्णो गृहपतिः कृष्णः समर्थोऽनर्थनाशनः।
अधर्मशत्रुरज्ञेयः पुरुहूतः पुरुश्रुतः॥ ७१
ब्रह्मगर्भो बृहद्गर्भो धर्मधेनुर्धनागमः।
जगद्धितैषी सुगतः कुमारः कुशलागमः॥ ७२
हिरण्यवर्णो ज्योतिष्मान्नानाभूतरतो ध्वनिः।
अरागो नयनाध्यक्षो विश्वामित्रो धनेश्वरः॥ ७३
ब्रह्मज्योतिर्वसुधामा महाज्योतिरनुत्तमः।
मातामहो मातरिश्वा नभस्वान्नागहारधृक्॥ ७४
पुलस्त्यः पुलहोऽगस्त्यो जातूकर्ण्यः पराशरः।
निरावरणनिर्वारो वैरञ्च्यो विष्टरश्रवाः॥ ७५
आत्मभूरनिरुद्धोऽत्रिर्ज्ञानमूर्तिर्महायशाः।
लोकवीराग्रणीर्वीरश्चण्डः सत्यपराक्रमः॥ ७६
व्यालकल्पो महाकल्पः कल्पवृक्षः कलाधरः।
अलंकरिष्णुरचलो रोचिष्णुर्विक्रमोन्नतः॥ ७७
आयुःशब्दपतिर्वेगी प्लवनः शिखिसारथिः।
असंसृष्टोऽतिथिः शक्रप्रमाथी पादपासनः॥ ७८
वसुश्रवा हव्यवाहः प्रतप्तो विश्वभोजनः।
जप्यो जरादिशमनो लोहितात्मा तनूनपात्॥ ७९
बृहदश्वो नभोयोनिः सुप्रतीकस्तमिस्रहा।
निदाघस्तपनो मेघः स्वक्षः परपुरञ्जयः॥ ८०
सुखानिलः सुनिष्पन्नः सुरभिः शिशिरात्मकः।
वसन्तो माधवो ग्रीष्मो नभस्यो बीजवाहनः॥ ८१

अङ्गिरा गुरुरात्रेयो विमलो विश्ववाहनः।
पावनः सुमतिर्विद्वांस्त्रैविद्यो वरवाहनः॥ ८२
मनोबुद्धिरहङ्कारः क्षेत्रज्ञः क्षेत्रपालकः।
जमदग्निर्बलनिधिर्विगालो विश्वगालवः॥ ८३
अघोरोऽनुत्तरो यज्ञः श्रेष्ठो निःश्रेयसप्रदः।
शैलो गगनकुन्दाभो दानवारिररिंदमः॥ ८४
रजनीजनकश्चारुर्निःशल्यो लोकशल्यधृक्।
चतुर्वेदश्चतुर्भावश्चतुरश्चतुरप्रियः॥ ८५
आम्नायोऽथ समाम्नायस्तीर्थदेवशिवालयः।
बहुरूपो महारूपः सर्वरूपश्चराचरः॥ ८६
न्यायनिर्मायको न्यायी न्यायगम्यो निरञ्जनः।
सहस्रमूर्धा देवेन्द्रः सर्वशस्त्रप्रभञ्जनः॥ ८७
मुण्डो विरूपो विक्रान्तो दण्डी दान्तो गुणोत्तमः।
पिङ्गलाक्षो जनाध्यक्षो नीलग्रीवो निरामयः॥ ८८
सहस्रबाहुः सर्वेशः शरण्यः सर्वलोकधृक्।
पद्मासनः परं ज्योतिः पारम्पर्यफलप्रदः॥ ८९
पद्मगर्भो महागर्भो विश्वगर्भो विचक्षणः।
परावरज्ञो वरदो वरेण्यश्च महास्वनः॥ ९०
देवासुरगुरुर्देवो देवासुरनमस्कृतः।
देवासुरमहामित्रो देवासुरमहेश्वरः॥ ९१
देवासुरेश्वरो दिव्यो देवासुरमहाश्रयः।
देवदेवमयोऽचिन्त्यो देवदेवात्मसम्भवः॥ ९२
सद्योनिरसुरव्याघ्रो देवसिंहो दिवाकरः।
विबुधाग्रचरश्रेष्ठः सर्वदेवोत्तमोत्तमः॥ ९३
शिवज्ञानरतः श्रीमान् शिखिश्रीपर्वतप्रियः।
वज्रहस्तः सिद्धखड्गो नरसिंहनिपातनः॥ ९४
ब्रह्मचारी लोकचारी धर्मचारी धनाधिपः।
नन्दी नन्दीश्वरोऽनन्तो नग्नव्रतधरः शुचिः॥ ९५
लिङ्गाध्यक्षः सुराध्यक्षो योगाध्यक्षो युगावहः।
स्वधर्मा स्वर्गतः स्वर्गस्वरः स्वरमयस्वनः॥ ९६
बाणाध्यक्षो बीजकर्ता धर्मकृद्धर्मसम्भवः।
दम्भोऽलोभोऽर्थविच्छम्भुः सर्वभूतमहेश्वरः॥ ९७
श्मशाननिलयस्त्र्यक्षः सेतुरप्रतिमाकृतिः।
लोकोत्तरस्फुटालोकस्त्र्यम्बको नागभूषणः॥ ९८
अन्धकारिर्मखद्वेषी विष्णुकन्धरपातनः।
हीनदोषोऽक्षयगुणो दक्षारिः पूषदन्तभित्॥ ९९
धूर्जटिः खण्डपरशुः सकलो निष्कलोऽनघः।
अकालः सकलाधारः पाण्डुराभो मृडो नटः॥ १००
पूर्णः पूरयिता पुण्यः सुकुमारः सुलोचनः।
सामगेयप्रियोऽक्रूरः पुण्यकीर्तिरनामयः॥ १०१
मनोजवस्तीर्थकरो जटिलो जीवितेश्वरः।
जीवितान्तकरो नित्यो वसुरेता वसुप्रदः॥ १०२
सद्गतिः सत्कृतिः सिद्धिः सज्जातिः खलकण्टकः।
कलाधरो महाकालभूतः सत्यपरायणः॥ १०३
लोककल्याणकर्ता च लोकोत्तरसुखालयः।
चन्द्रसञ्जीवनः शास्ता लोकगूढो महाधिपः॥ १०४
लोकबन्धुर्लोकनाथः कृतज्ञः कीर्तिभूषणः।
अनपायोऽक्षरः कान्तः सर्वशस्त्रभृतां वरः॥ १०५
तेजोमयो द्युतिधरो लोकानामग्रणीरणुः।
शुचिस्मितः प्रसन्नात्मा दुर्जेयो दुरतिक्रमः॥ १०६
ज्योतिर्मयो जगन्नाथो निराकारो जलेश्वरः।
तुम्बवीणो महाकोपो विशोकः शोकनाशनः॥ १०७

त्रिलोकपस्त्रिलोकेशः सर्वशुद्धिरधोक्षजः।
अव्यक्तलक्षणो देवो व्यक्ताव्यक्तो विशाम्पतिः॥ १०८
वरशीलो वरगुणः सारो मानधनो मयः।
ब्रह्मा विष्णुः प्रजापालो हंसो हंसगतिर्वयः॥ १०९
वेधा विधाता धाता च स्रष्टा हर्ता चतुर्मुखः।
कैलासशिखरावासी सर्वावासी सदागतिः॥ ११०
हिरण्यगर्भो द्रुहिणो भूतपालोऽथ भूपतिः।
सद्योगी योगविद्योगी वरदो ब्राह्मणप्रियः॥ १११
देवप्रियो देवनाथो देवज्ञो देवचिन्तकः।
विषमाक्षो विशालाक्षो वृषदो वृषवर्धनः॥ ११२
निर्ममो निरहङ्कारो निर्मोहो निरुपद्रवः।
दर्पहा दर्पदो दृप्तः सर्वर्तुपरिवर्तकः॥ ११३
सहस्रजित् सहस्रार्चिः स्निग्धप्रकृतिदक्षिणः।
भूतभव्यभवन्नाथः प्रभवो भूतिनाशनः॥ ११४
अर्थोऽनर्थो महाकोशः परकार्यैकपण्डितः।
निष्कण्टकः कृतानन्दो निर्व्याजो व्याजमर्दनः॥ ११५
सत्त्ववान्सात्त्विकः सत्यकीर्तिः स्नेहकृतागमः।
अकम्पितो गुणग्राही नैकात्मा नैककर्मकृत्॥ ११६
सुप्रीतः सुमुखः सूक्ष्मः सुकरो दक्षिणानिलः।
नन्दिस्कन्धधरो धुर्यः प्रकटः प्रीतिवर्धनः॥ ११७
अपराजितः सर्वसत्त्वो गोविन्दः सत्त्ववाहनः।
अधृतः स्वधृतः सिद्धः पूतमूर्तिर्यशोधनः॥ ११८
वाराहशृङ्गधृक्छृङ्गी बलवानेकनायकः।
श्रुतिप्रकाशः श्रुतिमानेकबन्धुरनेककृत्॥ ११९
श्रीवत्सलशिवारम्भः शान्तभद्रः समो यशः।
भूशयो भूषणो भूतिर्भूतकृद् भूतभावनः॥ १२०
अकम्पो भक्तिकायस्तु कालहा नीललोहितः।
सत्यव्रतमहात्यागी नित्यशान्तिपरायणः॥ १२१
परार्थवृत्तिर्वरदो विरक्तस्तु विशारदः।
शुभदः शुभकर्ता च शुभनामा शुभः स्वयम्॥ १२२
अनर्थितोऽगुणः साक्षी ह्यकर्ता कनकप्रभः।
स्वभावभद्रो मध्यस्थः शत्रुघ्नो विघ्ननाशनः॥ १२३
शिखण्डी कवची शूली जटी मुण्डी च कुण्डली।
अमृत्युः सर्वदृक्सिंहस्तेजोराशिर्महामणिः॥ १२४
असंख्येयोऽप्रमेयात्मा वीर्यवान् वीर्यकोविदः।
वेद्यश्चैव वियोगात्मा परावरमुनीश्वरः॥ १२५
अनुत्तमो दुराधर्षो मधुरप्रियदर्शनः।
सुरेशः शरणं सर्वः शब्दब्रह्म सतां गतिः॥ १२६
कालपक्षः कालकालः कङ्कणीकृतवासुकिः।
महेष्वासो महीभर्ता निष्कलङ्को विशृङ्खलः॥ १२७
द्युमणिस्तरणिर्धन्यः सिद्धिदः सिद्धिसाधनः।
विश्वतः संवृतः स्तुत्यो व्यूढोरस्को महाभुजः॥ १२८
सर्वयोनिर्निरातङ्को नरनारायणप्रियः।
निर्लेपो निष्प्रपञ्चात्मा निर्व्यङ्गो व्यङ्गनाशनः॥ १२९
स्तव्यः स्तवप्रियः स्तोता व्यासमूर्तिर्निरङ्कुशः।
निरवद्यमयोपायो विद्याराशी रसप्रियः॥ १३०
प्रशान्तबुद्धिरक्षुण्णः सङ्ग्रही नित्यसुन्दरः।
वैयाघ्रधुर्यो धात्रीशः शाकल्यः शर्वरीपतिः॥ १३१
परमार्थगुरुर्दत्तः सूरिराश्रितवत्सलः।
सोमो रसज्ञो रसदः सर्वसत्त्वावलम्बनः॥ १३२
एवं नाम्नां सहस्रेण तुष्टाव हि हरं हरिः।
प्रार्थयामास शम्भुं वै पूजयामास पङ्कजैः॥ १३३

[श्रीशिवमहापुराण, कोटिरुद्रसंहिता अ० ३५]

# श्रीशिवमहापुराणमाहात्म्यम्

वेदान्तसारसर्वस्वं पुराणं चैवमुत्तमम्।
सर्वाघौघोद्धारकरं परत्र परमार्थदम्॥ १
कलिकल्मषविध्वंसि यस्मिञ्छिवयशः परम्।
विजृम्भते सदा विप्राश्चतुर्वर्गफलप्रदम्॥ २
तस्याध्ययनमात्रेण पुराणस्य द्विजोत्तमाः।
सर्वोत्तमस्य शैवस्य ते यास्यन्ति सुसद्गतिम्॥ ३
तावद्विजृम्भते पापं ब्रह्महत्यापुरस्सरम्।
यावच्छिवपुराणं हि नोदेष्यति जगत्यहो॥ ४
तावत्कलिमहोत्पाताः सञ्चरिष्यन्ति निर्भयाः।
यावच्छिवपुराणं हि नोदेष्यति जगत्यहो॥ ५
तावत्सर्वाणि शास्त्राणि विवदन्ते परस्परम्।
यावच्छिवपुराणं हि नोदेष्यति जगत्यहो॥ ६
तावत्स्वरूपं दुर्बोधं शिवस्य महतामपि।
यावच्छिवपुराणं हि नोदेष्यति जगत्यहो॥ ७
तावद्यमभटाः क्रूराः सञ्चरिष्यन्ति निर्भयाः।
यावच्छिवपुराणं हि नोदेष्यति जगत्यहो॥ ८
तावत्सर्वपुराणानि प्रगर्जन्ति महीतले।
यावच्छिवपुराणं हि नोदेष्यति जगत्यहो॥ ९
तावत्सर्वाणि तीर्थानि विवदन्ते महीतले।
यावच्छिवपुराणं हि नोदेष्यति जगत्यहो॥ १०
तावत्सर्वे मुदा मन्त्रा विवदन्ते महीतले।
यावच्छिवपुराणं हि नोदेष्यति महीतले॥ ११
तावत्सर्वाणि क्षेत्राणि विवदन्ते महीतले।
यावच्छिवपुराणं हि नोदेष्यति महीतले॥ १२
तावत्सर्वाणि पीठानि विवदन्ते महीतले।
यावच्छिवपुराणं हि नोदेष्यति महीतले॥ १३
तावत्सर्वाणि दानानि विवदन्ते महीतले।
यावच्छिवपुराणं हि नोदेष्यति महीतले॥ १४
तावत्सर्वे च ते देवा विवदन्ते महीतले।
यावच्छिवपुराणं हि नोदेष्यति महीतले॥ १५
तावत्सर्वे च सिद्धान्ता विवदन्ते महीतले।
यावच्छिवपुराणं हि नोदेष्यति महीतले॥ १६
अस्य शैवपुराणस्य कीर्तनश्रवणाद् द्विजाः।
फलं वक्तुं न शक्नोमि कार्त्स्न्येन मुनिसत्तमाः॥ १७
तथापि तस्य माहात्म्यं वक्ष्ये किञ्चित्तु वोऽनघाः।
चित्तमाधाय शृणुत व्यासेनोक्तं पुरा मम॥ १८
एतच्छिवपुराणं हि श्लोकं श्लोकार्धमेव च।
यः पठेद्भक्तिसंयुक्तः स पापान्मुच्यते क्षणात्॥ १९
एतच्छिवपुराणं हि यः प्रत्यहमतन्द्रितः।
यथाशक्ति पठेद् भक्त्या स जीवन्मुक्त उच्यते॥ २०
एतच्छिवपुराणं हि यो भक्त्यार्चयते सदा।
दिने दिनेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम्॥ २१
एतच्छिवपुराणं यः साधारणपदेच्छया।
अन्यतः शृणुयात् सोऽपि मत्तो मुच्येत पातकात्॥ २२
एतच्छिवपुराणं यो नमस्कुर्याददूरतः।
सर्वदेवार्चनफलं स प्राप्नोति न संशयः॥ २३
एतच्छिवपुराणं वै लिखित्वा पुस्तकं स्वयम्।
यो दद्याच्छिवभक्तेभ्यस्तस्य पुण्यफलं शृणु॥ २४
अधीतेषु च शास्त्रेषु वेदेषु व्याकृतेषु च।
यत्फलं दुर्लभं लोके तत्फलं तस्य सम्भवेत्॥ २५
एतच्छिवपुराणं हि चतुर्दश्यामुपोषितः।
शिवभक्तसभायां यो व्याकरोति स उत्तमः॥ २६
प्रत्यक्षरं तु गायत्रीपुरश्चर्याफलं लभेत्।
इह भुक्त्वाखिलान् कामानन्ते निर्वाणतां व्रजेत्॥ २७
उपोषितश्चतुर्दश्यां रात्रौ जागरणान्वितः।
यः पठेच्छृणुयाद्वापि तस्य पुण्यं वदाम्यहम्॥ २८
कुरुक्षेत्रादिनिखिलपुण्यतीर्थेष्वनेकशः ।
आत्मतुल्यधनं सूर्यग्रहणे सर्वतोमुखे॥ २९
विप्रेभ्यो व्यासमुख्येभ्यो दत्त्वा यत्फलमश्नुते।
तत्फलं सम्भवेत्तस्य सत्यं सत्यं न संशयः॥ ३०
एतच्छिवपुराणं हि गायते योऽप्यहर्निशम्।
आज्ञां तस्य प्रतीक्षेरन् देवा इन्द्रपुरोगमाः॥ ३१
एतच्छिवपुराणं यः पठञ्छृण्वन् हि नित्यशः।
यद्यत् करोति सत्कर्म तत्कोटिगुणितं भवेत्॥ ३२

(श्रीशिवमहापुराण, विद्येश्वरसंहिता)